29-11-18

## योग

सम्प्रज्ञात = सम्यक् प्रज्ञायतेऽस्मिन्निति सम्प्रज्ञातः समाधिः।

असम्प्रज्ञात = विरामप्रत्ययाभ्यास पूर्वः संस्कारशेषोऽन्यः।

[तं विद्यात् दुःख संयोग वियोगं योगसंज्ञितम्], -गीता.

1- अथ योगानुशासनम्। (योग) [बुद्धेः प्रतिसंवेदी पुरुष इति।]

2. योगश्चित्तवृत्तिनिरोधः। ← लिङ्ग - सम्बध्यते (साध्येन सह) इति सम्बन्धो लिङ्गम्।

3- तदा द्रष्टुः स्वरूपेऽवस्थानम्।

4- वृत्तिसारूप्यमितरत्र। [एकमेव दर्शनं, ख्यातिरेव दर्शनम्] बुद्धिवृत्ति को ख्याति कहते हैं।

5- वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः। (वृत्ति) [चित्तवृत्तिबोधे पुरुषस्यानादि सम्बन्धोऽ]

6- प्रमाणविपर्ययविकल्पनिद्रा स्मृतयः।

7- प्रत्यक्षानुमानागमाः प्रमाणानि। (प्रमाण) आप्तम् - विवेकख्याति

~~8- विपर्ययो क्लिष्ट वृत्ति~~

प्रत्यक्ष - इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात्तद्विषया सामान्यविशेषा - त्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणं।

अनुमान - अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः सम्बन्धो यस्तद्विषया सामान्यावधारणप्रधाना वृत्तिरनुमानम्। साध्यविशिष्टपर्वतोऽनुमेयस्तस्य

[यथा देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवत्।]

आगम ~~शब्द~~ - आप्तेन दृष्टोऽनुमितो वार्थः परत्र स्वबोधसङ्क्रान्तये शब्देनोपदिश्यते। [शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः]

8- विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्। (विपर्यय) (5) अविद्या अस्मिता राग द्वेष अभिनिवेश

9- शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। (विकल्प)

10- अभावप्रत्ययालम्बना वृत्तिर्निद्रा। (निद्रा)

11- अनुभूतविषयासम्प्रमोषः स्मृतिः। (स्मृति) 1- कल्पित 2- यथार्थ

12- अभ्यासवैराग्याभ्यां तन्निरोधः। (अभ्यास) [स्थित्यर्थं यत्नः सोऽभ्यासः]

13- तत्र स्थितौ यत्नोऽभ्यासः।

14- स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः।

15- दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्। (वैराग्य)

16- तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्।। (परवैराग्य)

[ज्ञानस्यैव पराकाष्ठा वैराग्यम्]

Scanned with CamScanner

17 – वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः। (सम्प्रज्ञात) सालम्बन समाधियाँ ✓

18 – विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः। (असम्प्रज्ञात) ✓

19 – भवप्रत्ययो विदेहप्रकृतिलयानाम्। (भव) ✓

अधिमात्रोपायतीव्रसंवेग — मृदु, मध्य, अधिमात्र

20 – श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्। (उपाय)

आस्तिक्य, उत्साह, ध्यान, समाहित, विवेकख्याति — योगियों की

21 – तीव्रसंवेगानामासन्नः। — तीव्रसंवेग अधिमात्रोपाययोगी

22 – मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः। (अधिमात्रोपाय योगी भेद) ✓

"अधिमात्रतीव्रसंवेगाधिमात्रोपाययोगी"

23 – ईश्वरप्रणिधानाद्वा। (ईश्वरप्रणिधान) ✓

कर्म – धर्माधर्मौ, अविद्यादयः क्लेशाः, कर्मफल – विपाक

24 – क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः। (ईश्वर)

विपाकजन्य संस्कार वासना = आशय
फल

25 – तत्र निरतिशयं सर्वज्ञबीजम्।

योगी — मृदु, मध्य, अधिमात्र

चित्तभूमियाँ —

रजस (1) क्षिप्त – रजसा विषयेष्वेव क्षिप्तम्।

तमस (2) मूढ – तमसा निद्रादिवृत्तिमत्।

रजस (3) विक्षिप्त – क्षिप्ताद्विशिष्टं विक्षिप्तम्। (थोड़े समय के लिये मन टिकना)

सम्प्रज्ञात (4) एकाग्र – एकस्मिन्नेव विषयेऽग्रं शिखा यस्य चित्तदीपस्येत्येकाग्रं।

(5) निरुद्ध – निरुद्धं च निरुद्धसकलवृत्तिकं संस्कारमात्रशेषमित्यर्थः।

चित्तशक्तिरपरिणामिन्यप्रतिसङ्क्रमा दर्शितविषया शुद्धा चानन्ता च।

अविद्या – अनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या।

(26) पूर्वेषामपि गुरुः कालेनानवच्छेदात्।

अस्मिता – दृग्दर्शनशक्त्योरेकात्मतेवास्मिता।

(27) तस्य वाचकः प्रणवः।

राग – सुखानुशयी रागः।

द्वेष – दुःखानुशयी द्वेषः। * स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः। — अभिनिवेश

मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगद्
योगाचारमते तु सन्ति मतयस्तासां विवर्तोऽखिलः।

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

Scanned with CamScanner

1-2-19

## ॥ योगाङ्ग ॥

[यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ।]

* यमाः ⇒ "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः"॥

* अहिंसा - अहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः ।

* सत्य - सत्यं यथार्थे वाङ्मनसे ।

* अस्तेय - स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम् । तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति ।

* ब्रह्मचर्य - ब्रह्मचर्यं गुप्तेन्द्रियस्योपस्थस्य संयमः ।

* अपरिग्रह - विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रह ।

[जातिकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥] (ये यम महाव्रत कहे जाते हैं)

* नियमाः ⇒ शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः॥

* शौचं - शौचं मृज्जलादिजनितं मेध्याभ्यवहरणादि च-बाह्यम्,
*आभ्यन्तरं - चित्तमलानामाक्षालनम् ।

* सन्तोषः - सन्तोषः सन्निहितसाधनादधिकस्यानुपादित्सा ।

* तपः - तपो द्वन्द्वसहनम् ।

* स्वाध्यायः - स्वाध्यायो मोक्षशास्त्राणामध्ययनं प्रणवजपो वा ।

* ईश्वरप्रणिधानं - ईश्वरप्रणिधानं तस्मिन् परमगुरौ सर्वकर्मार्पणम् -

"शय्याऽऽसनस्थोऽथ पथि व्रजन् वा स्वस्थः परिक्षीणवितर्कजालः ।
संसारबीजक्षयमीक्षमाणः स्यान्नित्यमुक्तोऽमृतभोगभागी ॥"

Scanned with CamScan

*यम – योगाङ्गों के प्रतिष्ठित हो जाने पर फल –

अहिंसा – अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः॥

सत्य – सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्॥

अस्तेय – अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्॥

ब्रह्मचर्य – ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः॥

अपरिग्रह – अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः॥

*नियमाः –

शौच – [शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः॥
[सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च॥

सन्तोष – सन्तोषादनुत्तमसुखलाभः॥

" यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥

तप – कायेन्द्रियसिद्धिरशुद्धिक्षयात् तपसः॥

स्वाध्याय – स्वाध्यायादिष्टदेवतासम्प्रयोगः॥

ईश्वरप्रणिधान – समाधिसिद्धिरीश्वरप्रणिधानात्

* आसन ⇒ स्थिरसुखमासनम्॥

* आसनसिद्धि – प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्॥ ततो द्वन्द्वानभिघातः॥

* प्राणायाम ⇒ तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः॥

"बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः॥"
दीर्घ

* रेचक/बाह्य – यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः।

*पूरक/आभ्यन्तर – यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः।

* कुम्भक/स्तम्भवृत्ति – स्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद्भवति।

*केवलकुम्भक – "बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः"॥

"ततः क्षीयते प्रकाशावरणम्"॥ धारणासु च योग्यता मनसः॥

[प्राणायाम की सिद्धि से प्रकाश पर पड़ा हुआ पर्दा क्षीण होता है]

Scanned with CamScan

* प्रत्याहार :=> स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः।

"[ततः परमा वश्यतेन्द्रियाणाम्"॥] ↑ यथा- मधुकरराजं मक्षिका ——

* धारणा => देशबन्धश्चित्तस्य धारणा॥ यथा- नाभिचक्रे, हृदयपुण्डरीके ——

* ध्यान => तत्र प्रत्ययैकतानता ध्यानम्॥

* समाधि => तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।

"त्रयमेकत्र संयमः"॥ ये तीनों संयम कहे जाते हैं।

तज्जयात् प्रज्ञालोकः॥ संयम को जीतने से प्रज्ञा का प्रकाश होता है।

Scanned with CamScanner

पुरुष + प्रकृति -(शक्ति) — Electron

बुद्धि, महत्, चित्

अहङ्कार - Formles

सत्व — (11) इन्द्रियां
रज
तम — पञ्चतन्मात्रा — परमाणु (पञ्चमहाभूत)

- रजस, चंचल — क्षिप्त — कार्य में प्रवृत्त
- तमस — मूढ़ — कार्य न करने देना
- रजस — विक्षिप्त — थोड़े समय के लिये मन का टिकना।
- सत्व — एकाग्र — मन पर पूर्ण नियन्त्रण (इच्छानुसार, बिना काल देश के)
- निरुद्ध — असम्प्रज्ञात (जहां अज्ञान नहीं होता और जानने के लिये कुछ नहीं होता (रहता)।

सम्प्रज्ञात समाधि

- सवितर्क — सवितर्क — ~~निर्वितर्क~~ [वितर्कश्चित्तस्यालम्बने स्थूल आभोगः।]
- वितर्कविकला: — सविचार — ~~निर्विचार~~ सूक्ष्मो विचार
- विचारविकला — सानन्द — आनन्दो ह्लादः
- एकलोऽस्मितामात्र — सास्मिता — अस्मिता का ज्ञान (दृक् शक्ति पुरुष की शक्ति दर्शन प्रकृति शक्ति जहां पर एक हो जाए।
  (एकात्मिका संविदस्मिता)

⇒ पञ्चविंशति तत्त्वानां सङ्ख्याविचारः। तमधिकृत्य कृतो ग्रन्थः
साङ्ख्य इति साङ्ख्यपदव्युत्पत्तिः सङ्गच्छते। (रघुनाथ तर्कवागीश भट्टाचार्य)

Scanned with CamScan

पुरुष + प्रकृति -(शक्ति) — Electron

बुद्धि, महत्, चित्त

अहङ्कार - Formles

सत्व — रज — तम

(11) इन्द्रियां

पञ्चतन्मात्रा

परमाणु (पञ्चमहाभूत)

रजस, चंचल — क्षिप्त — कार्य में प्रवृत्त

तमस — मूढ़ — कार्य न करने देना

रजस — विक्षिप्त — थोड़े समय के लिये मन का टिकना।

सत्व — एकाग्र — मन पर पूर्ण नियन्त्रण (इच्छानुसार, बिना काल देश के)

निरुद्ध — असम्प्रज्ञात (जहां ज्ञान नहीं होता और जानने के लिये कुछ नहीं होता (रहता)।

सम्प्रज्ञात समाधि

सवितर्क — सवितर्क — ~~निर्वितर्क~~ [वितर्कश्चित्तस्यालम्बने स्थूल आभोगः।]

वितर्कविकला — सविचार — ~~निर्विचार~~ सूक्ष्मो विचार

विचारविकला — सानन्द — आनन्दो ह्लादः

विकलोऽस्मितामात्र — सास्मिता — अस्मिता का ज्ञान (दृक् शक्ति पुरुष की शक्ति दर्शन प्रकृतिशक्ति जहां पर एक हो जाए।

(एकात्मिका संविदस्मिता)

⇒ पञ्चविंशतितत्त्वानां सङ्ख्याविचारः। तमधिकृत्य कृतो ग्रन्थः

साङ्ख्य इति साङ्ख्यपदव्युत्पत्तिः सङ्गच्छते। (रघुनाथ तर्कवागीश भट्टाचार्य)

Scanned with CamScan

* प्रत्याहार :⇒ स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः।

"[ततः परमा वश्यतेन्द्रियाणाम्"॥] यथा-मधुकरराजं मक्षिका ——

* धारणा ⇒ देशबन्धश्चित्तस्य धारणा॥ यथा- नाभिचक्रे, हृदयपुण्डरीके, ——

* ध्यान ⇒ तत्र प्रत्ययैकतानता ध्यानम्॥

* समाधि ⇒ तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।

"त्रयमेकत्र संयमः॥" ये तीनों संयम कहे जाते हैं।

तज्जयात् प्रज्ञालोकः॥ संयम को जीतने से प्रज्ञा का प्रकाश होता है।

* बहिरङ्गाणि = पञ्च अन्तरङ्गाणि = त्रीणि।

* कैवल्य ⇒ सत्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्।

* समापत्तिः ⇒ क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः।

* स्थूलविषयक समापत्तयः ⇒ ① सवितर्का ② निर्वितर्का
* सूक्ष्मवस्तुविषयक समापत्तयः ⇒ ① सविचारा ② निर्विचारा

① सवितर्का ⇒ शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः।

② निर्वितर्का ⇒ स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का।

① सविचारा ⇒ तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते।

② निर्विचारा ⇒ या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते।

Scanned with CamScan

* प्रत्याहार :=> स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां
प्रत्याहारः।

"[ततः परमा वश्यतेन्द्रियाणाम्"॥] ↑ यथा-मधुकरराजं मक्षिका ———

* धारणा => देशबन्धश्चित्तस्य धारणा ॥ यथा- नाभिचक्रे, हृदयपुण्डरीके ———

* ध्यान => तत्र प्रत्ययैकतानता ध्यानम् ॥

* समाधि => तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।

"त्रयमेकत्र संयमः"॥ ये तीनों संयम कहे जाते हैं।

तज्जयात् प्रज्ञालोकः ॥ संयम को जीतने से प्रज्ञा का प्रकाश होता है।

* बहिरङ्गाणि = पञ्च  अन्तरङ्गाणि = त्रीणि ।

* कैवल्य => सत्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्॥

| वैशारद्य काल में विशिष्ट प्रज्ञा उत्पन्न होती है जिसका नाम ऋतम्भरा है, वह अन्वर्थवाली होती है → आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम्॥ |

* समापत्ति :=> क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता
समापत्तिः।

* स्थूलविषयक समापत्त्रयः => ① सवितर्का ② निर्वितर्का [ये चार समापत्तियाँ
* सूक्ष्मवस्तुविषयक समापत्त्रयः => ① सविचारा ② निर्विचारा  'सबीज' समाधि हैं]

① सवितर्का => शब्दार्थज्ञानविकल्पैः (मिश्रित) सङ्कीर्णा सवितर्का समापत्तिः।

② निर्वितर्का => स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का।

① सविचारा => तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु
या समापत्तिः सा सविचारेत्युच्यते।

② निर्विचारा => या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु
सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते।

निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥(47) (निर्विचार समापत्ति के निर्मल हो जाने पर योगी को आध्यात्मिक प्रसाद प्राप्त होता है।)
प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान्।
भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति॥

Scanned with CamScanner

21/11/2017

* चित्त के विक्षेप उत्पन्न करने वाले विघ्न – (9)

व्याधिस्त्यानसंशयप्रमादाऽऽलस्याऽविरति भ्रान्तिदर्शनाऽलब्धभूमिकत्वाऽनवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः॥ (30)

व्याधि, स्त्यान, संशय, प्रमाद, आलस्य, अविरति, भ्रान्ति दर्शन, अलब्धभूमिकत्व, अनवस्थितत्व।

1. व्याधि = तत्र व्याधिर्धातुरसकरणवैषम्यम्। (शारीरिकपीड़ा)
2. स्त्यान = स्त्यानमकर्मण्यता चित्तस्य। (अकर्मण्यता)
3. संशय = संशय उभयकोटिस्पृग्विज्ञानं स्यादिदमेवं नैवं स्यादिति।
4. प्रमाद = प्रमादः समाधिसाधनानामभावनम्। (असावधानी)
5. आलस्य = आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः।
6. अविरति = अविरतिश्चित्तस्य विषयसम्प्रयोगात्मा गर्धः। (वैराग्याभाव)
7. भ्रान्तिदर्शन = भ्रान्तिदर्शनं विपर्ययज्ञानम्। (मिथ्याज्ञान)
8. अलब्धभूमिकत्व = अलब्धभूमिकत्वं समाधिभूमेरलाभः।
9. अनवस्थितत्व = अनवस्थितत्वं लब्धायां भूमौ चित्तस्याप्रतिष्ठा।

विक्षेपों के साथी ⇒ (5)

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः।

दुःख, दौर्मनस्य, अङ्गकम्पन, श्वास, प्रश्वास।

दुःख = येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद् दुःखम्। (31)

दौर्मनस्य = दौर्मनस्यमिच्छाविघाताच्चेतसः क्षोभः।

अङ्गकम्पन = यदङ्गान्येजयति कम्पयति तदङ्गमेजयत्वम्।

श्वास = प्राणो यद् बाह्यं वायुमाचामति स श्वासः।

प्रश्वास = यत्कोष्ठ्यं वायुं निःसारयति स प्रश्वासः।

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य॥ "विधारण = 'पूरक कुम्भक' का ग्रहण
प्रच्छर्दन = रेचक

Scanned with CamScanner

* प्रत्याहार :=> स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः।

"[ततः परमा वश्यतेन्द्रियाणाम्"॥] यथा-मधुकरराजं मक्षिका ——

* धारणा => देशबन्धश्चित्तस्य धारणा ॥ यथा- नाभिचक्रे, हृदयपुण्डरीके ——

* ध्यान => तत्र प्रत्ययैकतानता ध्यानम् ॥

* समाधि => तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।

"त्रयमेकत्र संयमः॥" ये तीनों संयम कहे जाते हैं।

तज्जयात् प्रज्ञालोकः॥ संयम को जीतने से प्रज्ञा का प्रकाश होता है।

* बहिरङ्गाणि = पञ्च अन्तरङ्गाणि = त्रीणि ।

* कैवल्य => सत्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्।

[*वैशारद्य काल में विशिष्ट प्रज्ञा उत्पन्न होती है जिसका नाम ऋतम्भरा है, वह संजन्य होती है। —> आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम्।]

* समापत्ति :=> क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः।

* स्थूलविषयक समापत्तयः => ① सवितर्का ② निर्वितर्का [ये चार समापत्तियां 'सबीज' समाधि हैं।]

* सूक्ष्मवस्तुविषयक समापत्तयः => ① सविचारा ② निर्विचारा

① सवितर्का => शब्दार्थज्ञानविकल्पैः (मिश्रित) सङ्कीर्णा सवितर्का समापत्तिः।

② निर्वितर्का => स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का।

① सविचारा => तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते।

② निर्विचारा => या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते।

* निर्विचारवैशारद्येऽध्यात्मप्रसादः॥(४६) (निर्विचार समापत्ति के निर्मल हो जाने पर योगी को आध्यात्मिक प्रसाद प्राप्त होता है।)

प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान्।
भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति॥

Scanned with CamScanner

21/11/2017

चित्त के विक्षेप / विघ्न =>

* चित्त के विक्षेप उत्पन्न करने वाले विघ्न – (9)

व्याधिस्त्यानसंशयप्रमादाऽऽलस्याऽविरति भ्रान्तिदर्शनाऽलब्धभूमि-
कत्वाऽनवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः॥ (3०)

व्याधि, स्त्यान, संशय, प्रमाद, आलस्य, अविरति,
भ्रान्ति दर्शन, अलब्धभूमिकत्व, अनवस्थितत्व।

1. व्याधि = तत्र व्याधिर्धातुरसकरणवैषम्यम्। (शारीरिकपीड़ा)
2. स्त्यान = स्त्यानमकर्मण्यता चित्तस्य। (अकर्मण्यता)
3. संशय = संशय उभयकोटिस्पृग्विज्ञानं स्यादिदमेवं नैवं स्यादिति।
4. प्रमाद = प्रमादः समाधिसाधनानामभावनम्। (असावधानी)
5. आलस्य = आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः।
6. अविरति = अविरतिश्चित्तस्य विषयसम्प्रयोगात्मा गर्धः। (वैराग्याभाव)
7. भ्रान्तिदर्शन = भ्रान्तिदर्शनं विपर्ययज्ञानम्। (मिथ्याज्ञान)
8. अलब्धभूमिकत्व = अलब्धभूमिकत्वं समाधिभूमेरलाभः।
9. अनवस्थितत्व = अनवस्थितत्वं लब्धायां भूमौ चित्तस्याप्रतिष्ठा।

विक्षेपों के साथी => (5)

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः।

दुःख, दौर्मनस्य, अङ्गकम्पन, श्वास, प्रश्वास।

दुःख = येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद् दुःखम्। (3०)

दौर्मनस्य = दौर्मनस्यमिच्छाविघाताच्चेतसः क्षोभः।

अङ्गकम्पन = यदङ्गान्येजयति कम्पयति तदङ्गमेजयत्वम्।

श्वास = प्राणो यद् बाह्यं वायुमाचामति स श्वासः।

प्रश्वास = यत्कौष्ठ्यं वायुं निःसारयति स प्रश्वासः।

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य॥

"विधारण = 'पूरक कुम्भक' को ग्रहण
प्रच्छर्दन = रेचक

Scanned with CamScanner